# राधाकान्तचरित्रशतकं ।



वाणि त्वं चिरसेवितापि चलिता यत्पूर्व्वमासीः सदा,
तेन त्वां न वदामि यत् तव तदा वासाय नासीत् स्थलं ।
राधाकान्तचरित्रपङ्कजवनं लब्धं मया साम्प्रतं,
मातस्ते प्रददामि तिष्ठसि न चेत् शक्तोऽहमद्योरितुं ॥ १

शून्यालङ्कृतिराकुलोज्झितरसा हीना गुणैरुज्ज्वलै(१)
र्मद्वाणी यदि वा तथापि भविता विद्वच्चमत्कारिणी ।
राधाकान्तचरित्रवर्णनकरी यस्मादियं साम्प्रतं
भूपालङ्कृतिभारवाहिकशिरा दुल्लीरबाला यथा ॥ २

---

(१) अलङ्कृतय उपमादयः वलयकुण्डलादयश्च, आकुलत्वं अक्रमिकवर्णनरूपं, अपरिच्छिन्नत्वञ्च, रसाः शृङ्गारादयः, गुणाः प्रसादादयः स्तत्यकारितादयश्च ।

पूर्व्वप्रबन्धपरिशीलनलब्धभावे,
धीरा निबन्ध इह सन्ति हि लब्धतोषाः।
किम्प्रीयते न विबुधै र्मधुमक्षिकाभि-
र्नानाप्रसूननिचयान्मधु चीयमानं॥ ३

अपि नवेन पदेन पुरातनी,
विरचिता विदुषाम्मुदे कथा।
तरुणिमोपचितावयवाबला,
परिचिताहि चिरं रुचिरायते॥ ४

कायस्थवंशजलधौ परिलब्धजन्मा
शैत्यप्रसादगुणराशि निवासभूमिः।
प्रोल्लासयंश्च कुमुदं निजदेहदानै(१)
र्यो वर्द्धयन् क्षितिसुरानपरः सुधांशुः॥ ५

पालयन्नवनीं यस्तु हिंसाद्वेषपराङ्मुखः।
लभमानः श्रियं(२) नाम्ना, राधाकान्त(३) इतिश्रुतः॥ ६

(१) शैत्यं शीतलता अक्रोधिताच, प्रसादो निर्म्मलता सर्व्वदा हास्यादिकञ्च, कुमुदमिति द्वितीयान्तं कुमुत्-कुमुदशब्दाभ्यां सिद्धं तेन कुमुदं जलजपुष्पविशेषः कुमुत् पृथिवीहर्षश्च। सुधाकरः कृष्णपक्षे प्रत्यह-मेकैककलां देवगणान् भोजयतीति पौराणिकः प्रवादः।

(२) श्रीराधिपत्यं लक्ष्मीश्च।

(३) राधाकान्तः स्वयं नृपति र्विष्णुश्च।

बाणाम्बराश्वेन्दुमिते शकाब्दे
पक्षे सिते चन्द्रमितेच चैत्रे ।
वारे गुरौ यं धरणीशमासीत्
लब्ध्वा क्षिति हर्षपयोधिमग्ना ॥ ७

बाल्यादामरणं यएव नृपतिः शास्त्रोपदेशेऽखिले,
विश्वासी जननीवचःस्विव शिशुः कालत्रय(१)स्थाय्यपि ।
आसक्तः सततं स्त्रियामिव युवा सत्कर्म्मणोऽनुष्ठितौ,
प्रेयः शास्त्रविगर्हितं परिजहौ वृद्धो नवाङ्गीमिव ॥ ८

प्राचीना जननीव येन जरती नीतिश्चिरं पालिता,
वृद्धः स्वीयपितेव पालिततमो येनैव धर्म्मः सदा ।
आबाल्यं खलु यस्य दोषमिलिता वार्त्तापि न श्रूयते,
येनानादरवारिधौ निपतितं शास्त्रं समुत्तारितं॥ ९

अस्थायिभारतैश्वर्य्यं ज्ञात्वामात्यवशन्तु यः ।
महाभारतसाम्राज्ये विचचार हिताहितं ॥ १०

यत्कृते मन्थनैरेष शास्त्रसिन्धु र्निरन्तरं ।
क्षणमात्रं स्थिरो नासीत् पवनाहतपत्रवत्॥ ११

(१) कालत्रयं बाल्ययौवनवार्द्धक्यरूपं ।

सन्दोह्य महतीर्गाश्च(१) लब्धैर्धर्मपयस्विभिः ।
न परं यः पुपोष स्वं समग्रानपि मानवान् ॥ १२

(२) धनदोपि कुबेरो न यः शुचि र्दहनो नहि ।
शतमन्यु र्न जिष्णुः सन् शिवोऽपि नोग्रतां गतः ॥ १३

भास्वान् नो तपनः कलानिधिरपि ख्यातो न दोषाकरो
वक्रो नावनिनन्दनोऽपिच बुधो यो नापि बालग्रहः ।(३)
नो नास्तिक्यनियामकोऽपिच गुरु र्दृष्ट्या न हीनः कवि-
र्नो मन्दश्चरमग्रहो ग्रहचयाद्भिन्नोऽपि सर्व्वग्रहः ॥ १४

(१) गोशब्दो धेनुवाक्ययोः परिचायक स्तेन महतीर्गा इत्यनेन श्रुतिः पयस्विनी धेनुश्च लभ्यते ।

(२) धनदो धनदाता यक्षराजश्च, कुबेरः कुनायकः यक्षराजश्च, शुचिः पवित्रो ऽग्निश्च, दहनो दाहहेतु रग्निश्च, शतमन्युर्बहुक्रोधः इन्द्रश्च, जिष्णु र्जयशीलः इन्द्रश्च, शिवो मङ्गलवान् शम्भुश्च, उग्रता भयानकत्वं शम्भुत्वञ्च ।

(३) भास्वान् प्रदीप्तः सूर्य्यश्च, तपन स्तापहेतुः सूर्य्यश्च, कलानिधिः कामादिचतुःषष्टिकलाप्रज्ञश्चन्द्रश्च, दोषाकरो दोषाश्रयः चन्द्रश्च, वक्रः कुटिलः कुजश्च, अवनिनन्दनः पृथिव्या आनन्दजनकः कुजश्च, बुधः पण्डितः बुधग्रहश्च, बालग्रहो ऽल्पप्रज्ञः बुधग्रहश्च, नास्तिक्यनियामको नास्तिकमतावलम्बी बृहस्पतिश्च, गुरुर्गौरववान् बृहस्पतिश्च, दृष्ट्या न हीनः दर्शनशास्त्रज्ञः अनन्धश्च, कविः कवित्वशक्तिमान् शुक्राचार्य्यश्च, शुक्राचार्य्योऽपि दृष्टिहीनः। मन्दो मूर्खः शनैश्चरश्च, चरमग्रहः तत्त्वज्ञानी शनैश्चरश्च, सर्व्वग्रहः सर्व्वविषयकज्ञानवान् रव्यादिनवग्रह-स्वरूपश्च ।

दानादियानमवलम्ब्य यदीयकीर्त्ति-
गत्वा समस्तभुवनान्तपदं निरङ्का ।
मन्दाकिनीतटनिवासजनेन सार्द्धं
लोकान् करोति निखिलान् समकक्षभाजः ॥ १५

मित्रे प्रीततया गुणे शुचितया गत्या दिशां सौरभे,
कोषे पुष्टतया दले बहुतया तैक्ष्ण्येन दण्डेषु च ।(१)
स्थायित्वेन वने स्वकण्टकचयस्यान्तःप्रियत्वेन वा,
जित्वा यः सुमनोगणांश्चिरतरं पद्मालयावासभूः ॥ १६

दृष्ट्वा सत्कृतिनाशमुत्तरमपि स्वर्गं फलं व्याकुला
भाग्यं द्वारमिह प्रकल्प्य विफलं क्लिश्नन्ति मीमांसकाः ।
या याः सत्कृतयश्चिरन्तनकृते ताएव कः संशयो
नोचेदेष न्वतः कुतोऽस्य नृपते स्तिष्ठन्त्यहो सत्क्रियाः ॥

---

(१) मित्रं बन्धुः मित्रः सूर्य्यश्च, गुणः पाण्डित्यादिः मृणालतन्तुश्च, सौरभं यशः सद्गन्धश्च, कोषो धनागारं वराटकश्च, दलः प्रकाशः पत्रश्च, दण्डोऽसतां ताडनं पद्माश्रयदण्डश्च, वनमरण्यं जलञ्च, कण्टकाः शत्रवः कण्टकाश्च, अन्तर्मनः मध्यञ्च, सुमनसः पण्डिताः पुष्पाणि च ।

यस्योदिते यशसि शुभ्ररुचौ विशाले,
तारा सती पतिनिरूपणजातशङ्का ।
यत्कज्जलेन समचिह्नयदात्मनाथं,
तेनैव सम्प्रति विधौ रमते कलङ्कः॥ १८

गाम्भीर्य्य धैर्य्य धनवत्त्व प्रसन्नभावान्,
यस्यावलोक्य मनसो ऽतिविषादभाजः ।
रत्नाकरस्य सततोज्झितनिद्रितस्य,
चिन्तानलो ज्वलति नैवहि बाडवाग्निः ॥ १९

यं दृष्ट्वा नृपशार्दूलं संहृतं सुमनोगणैः । (१)
चिन्ताग्निं वमति क्लिष्टं दावानलमिषाद्वनं ॥ २०

यद्भूमिभर्तुः सहनक्षमत्वं
यदैव चिन्तां कुरुते तदानीं ।
सर्व्वंसहा भूरपि कम्पिताङ्गी,
तत्कम्पने नान्य इतोऽस्ति हेतुः ॥ २१

शब्दकल्पद्रुमं येन रचितं साम्यवर्ज्जितं ।
पश्यन्तो मनुजाः सर्व्वे प्रशंसन्ति निरन्तरं ॥ २२

---

(१) सुमनसः पण्डिताः पुष्पाणिच ।

विक्टोरिया ददौ यस्मै पदकं स्वमुखाङ्कितं ।
ग्रथितं हैमहारेण दुर्लभं जगतीतले ॥ २३
पुनरेषातिसन्तुष्टा हीरकाचरशोभितं ।
ताराकारं ददौ यस्मै पदकञ्चास्यचिह्नितं ॥ २४
तस्या नाइट् कमेण्डर् इष्टार् आफ् इण्डियोपाधिं।
यो वसनासिगजाख्यैः सह लेभे संसदि नृपाणां नृपः॥२५
रसीयादेशसम्राजा दत्तं सम्मानगर्भितं ।
अनन्यलभ्यं येनाप्तं प्रशंसापत्रमुज्ज्वलं ॥ २६
पुरूषियाधिपतीशान-सिंहेन प्रीतचेतसा ।
दत्तं येनाददे पत्रं बहुसम्मानसूचकं ॥ २७
आयर्लण्ड-ग्रेट्ब्रिटेन-प्रवीण-धनि-मानवैः ।
विचार्य्यानन्यसदृशं दत्तं पत्रमवाप यः ॥ २८
धीरैः सम्भ्रान्तलोकैश्च जर्म्मान्देशनिवासिभिः।
अतुल्यमानकलितं यो लेभे पत्रमर्पितं ॥ २९
पारीशामेरिकास्थानां धीराणां महतां तथा।
मध्येषु बहुमन्यो यो लेभे पत्रं यशश्चितं ॥ ३०
सम्राड् डेन्मार्कदेशीयः स्वनाममुकुटाङ्कितं ।
हैमहारं ददौ यस्मै सहसम्मानपत्रकं ॥ ३१

यस्य हारस्य निम्नस्थं पदकं हेमनिर्म्मितं।
स्वास्येन चिह्नितं तादृग् वाग्मा मुकुटहस्तया॥ ३२
ऐकमत्येन वङ्गस्थैः पटमध्ये यदाकृतिः।
स्थापिता च कारयित्वा भारतस्य सभागृहे(१)॥ ३३
पूर्व्वोक्तानां समग्राणां सभायां यो महीपतिः।
अनन्यलभ्यसभ्यत्वं लेभे सर्व्वार्थदर्शनः॥ ३४
सर्व्वैश्वर्य्यं प्रभुञ्जानो विरतो लौकिके सुखे।
वेदागमितवर्षेषु वृन्दावनमवाप यः॥ ३५
गौरीनेत्रगुणत्रयद्विगुणितोदन्वद्गिरीन्दुप्रमे,
शाके वाजिमिते रवौ परिगते मेषेच पक्षे सिते।
शुक्राह्वे प्रतिपत्तिथौ प्रतिमुक्तः श्रीनाथनाम स्मरन्
राधाकान्तनृपो ममार यमुनातीरे स वृन्दावने॥ ३६
यदा धराधीश्वरो धरातले,
विषण्णसर्व्वेन्द्रियवृत्तिरापतत्।
तदा तदालोकिभिरात्तचेतनै-
र्दशा किमु प्रापि न वक्तुमीश्महे॥ ३७

---

(१) एसियाटिक सोसाइटी नामके।

निशम्य यन्मृत्युकथां निदारुणां,
स्थितास्म दूरे नहि जीवितुं क्षमाः।
यदंघ्रिभाङ्-मृत्युमवाप स प्रभु-
र्ययु र्न तेषामसवः किमद्भुतं ॥ ३८

किंवा वृन्दावनस्थानां दारुणप्रायचेतसां।
राधाकान्त(१) वियोगेन, दुःखं किं भविता नवं॥३९

यत् प्रार्थ्यते सुकृतिभिः कृतपुण्यसारै-
स्तेनैव तद् यदिच लब्ध-मनन्यलभ्यं।
हाहा तथापि खलु धर्म्ममयावनीश-
विच्छेददुःखदहना हृदयं दहन्ति ॥ ४०

कृत्वा भूपतिरश्वमेधशतकं भूत्वा त्रिलोकीपति-
स्तेतःप्रार्थितदायिनं प्रलभते यञ्चैव कल्पद्रुमं।
तेषां(२) यो निकरं ददौ सहि मृतः श्रुत्वेति यन्मादृशां
नो भिन्नं हृदयं ततः स्थिरतरं तद्वज्रसारात्मकं॥४१

(१) राधाकान्तः अयं नृपतिः, नन्दनन्दनः श्रीकृष्णोपि।

(२) तेषां कल्पद्रुमाणां अनेन शब्दकल्पद्रुमो नाम शब्दकोषो रचितः, बहुभ्यः प्रदत्तश्च, भीमसेनस्य भीमवत् शब्दकल्पद्रुमस्य कल्पद्रुमेति नाम्ना ग्रहणं।

रे रे प्राणिचयाः कठोरहृदया नेत्रेषु नास्त्यम्बु वो
यन्निक्षेपभरेण भूमि-रधुना पूर्णा भवेद् वारिणा।
तच्चिन्तानलशोषितं यदि तदा कुत्राप्यसौ वानलो
यत् प्राबल्यवशेन दह्यत इदं दुःखाभिमग्नं जगत्॥ ४२

अशक्तोऽस्त्यतिपुण्यात्मा, न सन्देहोऽत्र विद्यते।
यदस्य न हृदः खेदो, राधाकान्तवियोगजः॥ ४३

नाम्ना वृथा त्वमधुना यम धर्म्मराज,
नास्ते ऽपर स्तव समः समधर्म्मराजः।
नो चेत् कथं हरसि धर्म्ममयावनीशं
यन्नाशतो जगति धर्म्मलयप्रसङ्गः॥ ४४

के त्वां वदन्ति शमनं यम मूर्खलोका
नास्तेऽपर स्तव सदृक् खलु तापकारी।
पश्याधुना तव कृतापकृतेः समग्राः,
सन्तापसागरतटे मनुजा निमग्नाः॥ ४५

अथवा विफलं त्वयीरितं शमनत्वं तपनात्मजो यतः।
जनकीयगणं त्यजन्ति के मनुजाः सुष्ठतरोऽधरः सदा॥

रमाभर्त्तु र्हिंसाविरतमनस: पालनकृत-
श्चिरस्थानं वृन्दावनमिति पदं प्रीतिभवनं।
यदेतत् सङ्गीतं सुरनरवरैर्व्यर्थमिह तद्-
यतो राधाकान्त श्चिरतरतिरोधानमदधत् ॥ ४७

व्यासादयो यदभवंश्चिरजीविन स्ते
तत्र त्वदीयविभुतां भणते तु हेतुं।
धर्म्म प्रवाद इति सम्प्रति भाति चित्ते
नो चेत् कथं मरणमाप नरेन्द्र एष: ॥ ४८

कियत् कालं सन्त: किमपि विलपन्तो नृपकृते
भविष्याम: शान्ता विषयरतचित्ता: स्थिरतरं।
गति: का ते धर्म्मोदयति हि कृशावासरहित-
स्खलत्पादावद्य त्रिभुवनजनै श्चिन्त्यमधुना ॥ ४९

ये त्वां वदन्ति मनुजा वसुधे रसाढ्यां
मूढा स्तएव विरसा त्वमिवापरा न।
नो कातरा क्षणकृते कथमन्यथा त्वं
विच्छेदभागपि समग्रगुणस्य भर्त्तु: ॥ ५०

सत्यं सर्व्वंसहा पृथ्वि, जनैस्त्वमभिधीयसे।
राधाकान्तवियोगेन, न दीर्णासि न चञ्चला ॥ ५१

स्मरसि न मनसापि क्षौणि किं दुर्भगत्वं
निजमिह हतभागे किंविधा चासि वासी: ।
पतिविरहवती त्वं सागरे देहि देहं
कथमिह कुरु किंवा वह्निना देहदाहं ॥ ५२

यं प्रज्ञा: कथयन्ति धर्म्ममपरे ब्रह्म स्वयं शाश्वतं
वह्निं केच परे प्रजापतिमहो प्राप्नापि तं पूरुषं ।
स्वामित्वेन मनु क्षते श्रुतिनिबन्धारं धरे दुर्भगे
दौर्भाग्यात् कियत: परन्तु समयात् तेनापि सम्प्रोज्झिता

ब्रह्मादयोऽपि मुनयोऽपि च योगिनोऽपि
जानन्ति यस्य पुरुषस्य न तथ्यभावं ।
त्रेतायुगेऽपि तमहो महि रामसंज्ञं
सम्प्राप्य कान्तमपि तेन वियुक्तपूर्व्वा ॥ ५४

हा भूमि तत्परयुगेऽपि युधिष्ठिराख्यं
धर्म्मं स्वयं धृतमनुष्यतनुं सुकान्तं ।
धीरं मनोहरतनुं तनुभागधेये
सम्प्राप्य हा विरहितास्यमुनापि पश्चात् ॥ ५५

सुखप्रजापालनपूर्व्वकर्म्मणा
मनोरनूनो धरणीह रामत: ।
युधिष्ठिराख्यादपि धर्म्मराजत:
सदा सदाचाररतो बभूव य: ॥ ५६

अपि यस्तव नायको भव-
न्निह कालेऽपि कलौ वसुन्धरे ।
तव मङ्गलमेव मङ्गला-
द्रहिते ऽचिन्तयदात्मन: पणै: ॥ ५७

चक्रे यथार्थं निजनाम राधा-
कान्तं हि वृन्दावन-संस्थितो (१) य: ।
हा तेन पत्या रहितापि पृथ्वि
कथं न दीर्णासि कठोरकाये ॥ ५८

निशम्य वृन्दावनरेणुशय्यं
नृपं जनेनाभिहितेव दीना ।
विषस्रवेशा हतवङ्गभूमे
र्जगाम तस्मिन्नधिदेवताथ ॥ ५९

(१) संस्थितो मृतः सम्यक्स्थितिशीलश्च ।

समुद्रनेत्रं धरणीशयानं
करस्थ-जापस्रज-धूसराङ्गं ।
अलङ्कृताङ्गं तुलसीदलौघैः
श्रीरामनामाङ्कितवस्त्रशीर्षं ॥
क्षितौ दिगीशानमिवावसन्नं
जनै र्विषस्रैरभितः प्रपूर्णं ।
पार्श्वस्थितालोक्य रुदन्त्यजस्रं
जगाद दीना धरणीशमेषा ॥ ६१ इति युग्मकं ।
उत्तिष्ठ राजंस्त्यज भूमिशय्यां
प्रमील्य नेत्रे क्षणमेव पश्य ।
उपस्थितेयं हतवङ्गभूमे-
श्चिरं वियोगिन्यधिदेवताच ॥ ६२
या नीतपूर्व्वा भवता क्षितीश
महेन्द्रलोकादपि भाग्यवत्त्वं ।
साहं विना त्वां वत वङ्गवासै-
र्नीता यथारूप-मवेक्षणीया ॥ ६३

वस्त्रं सदाचारमयं गृहीतं
लज्जामयं नाथ कुचोत्तरीयं ।
सिन्दूरपूरः स्थिरधर्म्मरूपी
स्वधर्म्मविश्वासमयश्च हारः ॥ ६४

येषां मम स्थानजुषां सुराणां
प्रतिष्ठितानां पदमोच्चमाणाः ।
जनाः प्रणेमुः स्थिरभक्तियुक्ता-
स्ते साम्प्रतं लोष्ट्रसमा लुठन्ति ॥ ६५

यस्याः पुरा स्पर्शकृतः पुराणाः
स्वजन्मदौर्भाग्यचयं विजग्मुः ।
सा प्रायसः सम्प्रति पीयमाना
सुरा सुराणां तटिनीपयोवत् ॥ ६६

यस्मिन् कुले जन्मगता महान्तः
पवित्रमन्नं परिभुञ्जते स्म ।
तस्मिन् कुले सम्प्रति लब्धभावा
अदन्ति हृष्टा जवनान्नमेव ॥ ६७

यः पूर्व्वमालोकितु-मीश्वरो न
मित्रः सदा विष्णुपदे(१) विलीनः ।
ता योषितः सम्प्रति वीतलज्जा
नृत्यन्ति जल्पन्ति च राजपुंभिः ॥ ६८

ब्राह्मण्यधर्म्मोऽतितपोऽभिलभ्यो-
विनष्टकल्पः कियता दिनेन ।
प्रीत्याद्य शूद्रद्विजयो र्विवाह-
रैक्यं गतः सम्प्रति जातिभागः ॥ ६९

पत्यु र्वियोगोत्तर-मार्य्यधुर्य्यै
यद्‌ब्रह्मचर्य्यं विहितं वधूनां ।
हतन्तु तत् सम्प्रति पुत्रपौत्रा-
नादाय हृष्टापि परं प्रयाति ॥ ७०

द्विजास्तपोभि श्चिरयत्नसाध्यै-
र्यल्लेभिरे मानसमात्रभोग्यं ।
तद् ब्रह्मधर्म्मात्मकरत्नमद्य
क्रीणन्ति वाग्भि र्विपणौ मनुष्याः ॥ ७१

---

(१) विष्णुपदं नारायणचरणं आकाशञ्च ।

उपास्य वाग्भि र्विजहत् स्वधर्म्मं
यथेच्छचारी विचरन् जनौघः।
महान्धपङ्के पतिता परन्तु
निरञ्जने पुंसि कलङ्ककारी॥ ७२

केचि न्नवीना स्तृणवन्मनीषा
भाषासु मातुः किमपि त्वभिज्ञाः।
मन्वादिमूर्त्तिं प्रतिगृह्य नित्यं
नवं नवं धर्म्मपथं वदन्ति॥ ७३

समाजदुष्टो मनुजो विधर्म्मा
त्यक्तः स्वपित्रादिभि राप्तलोकैः।
कृपावशेनाद्य महोदयानां
भोज्यान्नतामेति हतापकीर्त्तिः॥ ७४

पुरा यदाज्ञावशता-मुपेत्य
जनाः समस्ता मरणेऽपि शक्ताः।
तस्याः श्रुतेः सम्प्रति सैव वाणी
निवार्य्यते पेचकवाग्विवाग्भु॥ ७५

का वासती का च सती च नारी
को नास्तिकः कोऽपि च धर्म्मचारी ।
को ब्राह्मणो वा जवनश्च कश्चिन्-
नाहंमि विज्ञातुमहो महीन्द्र ॥ ७६

यासीत् पुरा संस्कृतरत्नभूषा
विद्यातिमान्या प्रतिवेशिनी मे ।
कुबुद्धिदुश्चौरवधूस्तु भाषा-
गुञ्जास्रजा मुर्द्ध्नि ददाति पादं ॥ ७७

आचारपूतोत्तमनाथपुत्रा
कलिङ्गभूमिप्रभृतौ स्वयोनौ ।
ख्यातातिसौभाग्यवती पुरा या
साहं मुखं नेक्षयितुं समर्था ॥ ७८

उत्तिष्ठ राजंश्चर राजधान्यां
कुमार्गवृत्तानन्नुशाधि लोकान् ।
उपायमेतां प्रति साधयाग्रे
ततोऽत्र वासाय यतस्व नाथ ॥ ७९

यस्या मम क्षेमकृते पुरा त्वं
दिवाच रात्रिञ्च विनिद्र आसीः ।
साहं रुदन्ती कुररीव दीना
गिरापि नाश्वास्यतमा किमद्य ॥ ८०

हा हा कियत् कालमितो महीन्द्र
विसृज्य तिष्ठे यदि राजधानीं ।
माद्यत्कुसन्तानगणस्य हस्ते
का मे दशा श्वो नहि वक्तुमीशे ॥ ८१

श्रुति र्विनष्टा सह दर्शनेन
विलुप्तकल्पा स्मृतिरागमेन (१) ।
कालेऽद्य किन्ते विहितं क्षितीश
स्ववर्द्धितां माम्प्रति निर्दयत्वं ॥ ८२

---

(१) श्रुतिः कर्णाः वेदश्च, दर्शनं नयनं तर्कादिदर्शनशास्त्रञ्च, स्मृतिः स्मरणं मन्वादिधर्म्मशास्त्रञ्च, आगम आगमनं मन्त्रशास्त्रञ्च ।

संवर्द्ध्य सौभाग्यभरेण दीनां
त्यजे धरानायक चेद् विरक्तः ।
त्वामाश्रिता कं शरणं गता स्यां
क्षीणामवेन्मां त्वमिवापरः कः ॥ ८३

संवर्द्ध्य हन्तुं स्वयमेव योग्यः
कदा न राजन् विषपादपोऽपि ।
ततः कथं मां विगतानुरागो
वियोगिनीं नाशयितुं प्रवृत्तः ॥ ८४

मान्यातिसौभाग्यवती मनस्वि-
न्यनन्यतुल्याहमनन्यबोध्या ।
दृष्ट्वाधुना मां कथितेतिवृत्तां
विज्ञाय मत्तां तरुणा हसन्ति ॥ ८५

अधार्म्मिकश्चेदवनीशभर्त्ता
तद्भुक्तपूर्व्वा-मतिदीनवेशां ।
विलोक्य कार्य्यं विमुखत्वमेत-
न्न त्वं तथा तत किम वीतरागः ॥ ८६

सम्राट् सदा मां बहुसम्पदा चेत्
सन्तोषयत्यद्य तु लौकिकी सा ।
अहं प्रदृष्टापरलोकदर्शि-
न्यतीव भीता तत एव दीना ॥ ८७

श्रुत्या विहीनागमहानिदीना
स्मृतिच्युता दर्शनमात्रहीना ।
नाहं कृपार्हा यदि ते नरेश
नवाद्य वृन्दावनभूस्तथास्तु ॥ ८८

पश्यावनीश स्वनवीनकान्तां
श्रीमद्वियोगेन कियद्विषण्णां ।
ममापि तस्मात् कृतकृत्यभावः
श्रुत्वा वचो वीक्ष्य प्रसन्नभावं ॥ ८९

राजन्नघोभारनिपीडिताङ्गो
गावः स्ववत्सानपि नाह्वयन्ति ।
पिपासवोऽपि क्षुधिता मृगाश्च
तृणं न पश्यन्ति पिबन्ति नापः ॥ ९०

रोरुद्यमानानपि हन्त बालान्
दृष्ट्वा महीशान नवप्रसूता: ।
स्तनौ महाभारपतत्पयस्कौ
विषस्सचित्ता नहि पाययन्ति ॥ ९१

पिकोऽपि तिष्ठन् विटपान्तराले
पार्श्वे प्रियां स्वामनुवर्त्तमान: ।
हाहा वसन्तप्रसरेऽपि शब्दं
करोति नाल्पं त्वयि दत्तदृष्टि: ॥ ९२

महीरुहस्था: शिखिन: समस्ता:
किंभावमापन्नतमा विलोक्या: ।
प्रचण्डमार्त्तण्डकराक्तशीर्षा-
न्याच्छादयन्त्यद्य न पुच्छभारै: ॥ ९३

दृष्ट्वापि पुष्पं मधुभारनम्रं
पिपासुताशुष्कतरस्वकण्ठ: ।
कान्तायुत: सन् कुसुमान्तिकस्थो
भृङ्गो न पश्यत्यधुना त्वदीय: ॥ ९४

जले निषस्सा: क्षुधिता मराला-
श्चञ्चूपुटै र्लब्धमृणालभङ्गा: ।
नास्वाद्य किञ्चित् करुणं रुदन्त:
कुर्व्वन्ति नाथ त्वयि दृष्टिपातं ॥ ९५

वातायनस्था विकला: कपोता-
स्त्वामेव पश्यन्ति न चात्मभक्ष्यं ।
क्षुधात्मशावान् स्वनतश्च शार्य्यै:
सकोटचञ्च्वा नहि पाययन्ति ॥ ९६

महीरुहा: पल्लवशीर्णताया-
मिषेण दु:खानि हृदां वदन्ति ।
लताश्च शीर्णा मृतकल्पकाया-
भवन्ति दृष्ट्वेव भवद्विषादं ॥ ९७

नरेश वृन्दावनभू स्त्वदीय-
विच्छेदमाशङ्क्य नवीनदैन्या ।
यद् दह्यते दु:खभरेण चित्ते
तेनैव सन्तापचयो ऽदसीय: ॥ ९८

पश्य क्षणं सर्व्वविनाशकर्त्तु-
र्यमस्य भूमीश सहोदरायाः ।
शरीरमस्या अपि वारिरूपं
तवावसादेन महोपतापं ॥ ९९

राजन्नसौ ते विरहाभिशङ्की
नाना पदं गच्छति गन्धवाहः ।
कुत्रापि गत्वा तनुतापहानिं
कर्त्तुं न शक्नोति तथापि एषः ॥ १००

जना विषण्णाः पतगा विशब्दा
गावः स्थिरा निश्चलितास्च वृक्षाः ।
विषण्णभावेन नरेन्द्र तेऽद्य
वृन्दावनं मग्नमिवाधिमध्ये ॥ १०१

अथो कियत् कालमिमामवस्थां
गतोऽसि चेद् भूप तदा विशङ्के ।
जगत् समस्तं तव शोर्णभावात्
स्थिरं निमज्जिष्यति मृत्युवक्त्रे ॥ १०२

जातोऽपराधो यदि मे नरेश
स क्षन्तुमर्हः कृपयाबलायाः ।
दधानि पादाववलोकयैतां
स्त्रियो ह्यवध्या इति तच्चकार ॥ १०३

वायोरसञ्चारहिमं तदीयं
संस्पृश्य कायं मृतमत्यवस्था ।
आहत्य हस्तेन शिरो रुदन्ती
सा निश्वसन्ती विललाप भूयः ॥ १०४

निक्षिप्य मामाधिपयोधिमध्ये
हा नाथ किं मृत्युमुखं गतोऽसि ।
क्व यामि किंवा विदधामि दृष्ट्वा
को वाश्रयं मे प्रददाति राजन् ॥ १०५

भूत्वा वियुक्तापि भविष्यदार्य्य-
शुभागमाशामवलम्ब्य पूर्व्वं ।
जगाम धैर्य्यं निहतापि साद्य
निदारुणेनात्मभुवा मृताखि ॥ १०६

एतद्विधे चेतसि किं तवासीद्-
दत्त्वाश्रयं हृद्दयास्सु हंसि ।
न ते भयं किं रमणीवधाय
धिक् त्वामहो बालसमानचेष्टं ॥ १०७

नीतः पुरा पालयिता मनुर्मे
रामस्ततः सर्व्वगुणाभिरामः ।
युधिष्ठिरो हन्त ततो महात्मा
न तेन किन्ते कृतकृत्यभावः ॥ १०८

गतेषु सर्व्वेषु नरेश्वमेतं
गुणैरनूनं निखिलावनीशात् ।
आलम्ब्य सर्व्वां विरलो ममाधि-
र्विधे न ते किं हृदि तत्तु सह्यं ॥ १०९

तां संरुदन्तीं गलदश्रुधारं
वैकुण्ठलोकस्य तदाधिदेवी ।
उपेत्य तस्मिन्निजगाद राधा-
कान्तेरितो वाच्यमुदारगर्भां ॥ ११०

लभस्व धैर्य्यं त्यज वङ्गभूमे-

रधीश्वरि त्वं निजदीनभावं।

नासौ पुन र्गच्छति वङ्गभूमीं

कलिप्रभावेण विलुप्तपुण्यां॥ १११

शापेन देवः स्वयमेष हित्वा

वैकुण्ठधाम प्रपपात पृथ्व्यां।

सम्प्राप्तकालः पुनरद्य धाम्नि

स्वस्मिन् प्रविष्टोऽशमयोऽच्युतस्य॥ ११२

न ते तपस्तद् वसुधाधिदेवि

पश्यामि यत् त्वामवनीश एषः।

अवेत् सदा यत् तव पूर्व्वमासीत्

तत् कालतः क्षीणतमं हि पुण्यं॥ ११३

असौ तव स्नेहभरेण राजा

जगाद यत् तत् कुरु साम्प्रतं त्वं।

देहान्तरं मे शरणं लभस्व

ममात्मजं मध्यमलोकपालं॥ ११४

तस्यां समाख्याय विनिर्गतायां
दुःखाम्बुधौ सा तु धृतावलम्बा।
तस्माद्विनिर्गत्य नरेन्द्रसूनुं
समाश्रिता मध्यमलोकपालं ॥ ११५

पितेव तदसौ राजा, विदधन्निखिलाः कृतीः।
देवद्विजशुभाशीर्भि र्लभतां चिरजीवनं ॥ ११६

धर्म्मोऽपि श्रुतिभाषितेन विधिना सत्कर्म्मणोऽनुष्ठितिं
कुर्व्वद्भिः सततं समस्तमनुजैः संवर्द्धितः स्यात्तरां।
तेनैव क्षितिनायकोऽवतु शिव स्तिष्ठन्तु लोकाः सुखं
काले वर्षतु वारिदः समुचितं पूर्णास्तु शस्यैर्मही॥ ११७

वशिष्ठवंशजनुषा भट्टपल्लीनिवासिना।
श्रीताराचरणेनैतत् कृतं पूर्णत्वमागतं॥ ११८



# राधाकान्तनृपते-
# श्चरित्र शतकं

श्रील श्रीकाशीनरेशकरकमलतलच्छायाश्रित
भट्टपल्लीनिवासि वशिष्ठवंशोद्भव
श्रीताराचरण शर्म्मणा
विरचितं ।

"आपरितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानं"

इत्यभिज्ञानशकुन्तले ।

कलिकाता ।
गिरिश-विद्यारत्न यन्त्रे
अपर् सर्कुलर् रोड नं ५०।५ भवने
मुद्रितम् ।

सम्वत् १९२४ । ज्यैष्ठे ।

| श्लोक संख्याः | अशुद्धानि | शुद्धानि । |
|---|---|---|
| ७ | लब्धा | लब्ध्वा |
| २१ | चिन्तां | चित्ते |
| ३९ | दासत्वप्राय | दासत्वप्राप |
| ६३ | महेन्द्रलोकादपि | पुण्याश्रमेभ्योऽपि च |
| ६४ | स्वधर्मविश्वासमयश्च | नरेषु विश्वासमयश्च |
| ६६ | प्रायसः | प्रायशः |
| ७० | यद् | यँद |
| ९३ | शीर्षानि | शीर्षाणि |